श्री यदुगिरि-यतिराज मठ की

# गुरुपरम्परा



प्रकाशक

एम. टी. नारायण अयैंगार

मल्लेश्वरम्-बैंगलूर

  

श्रीमते रामानुजाय नमः ।

# गुरुपरंपरा ।

---

श्रीशैलेशदयापात्रं धीभक्त्यादिगुणार्णवम् ।
यतीन्द्रप्रवणं वन्दे रम्यजामातरं मुनिम् ॥ १ ॥
लक्ष्मीनाथसमारंभां नाथयामुनमध्यमाम् ।
अस्मदाचार्यपर्यन्तां वन्दे गुरुपरंपराम् ॥ २ ॥
यो नित्यमच्युतपदांबुजयुग्मरुक्म
व्यामोहतस्त-दितराणि तृणाय मेने ।
अस्मद्गुरोर्भगवतोऽस्य दयैकसिन्धो
रामानुजस्य चरणौ शरणं प्रपद्ये ॥ ३ ॥

माता पिता युवतयस्तनया विभूति
सर्वं यदेव नियमेन मदन्वयानाम् ।
आद्यस्य नः कुलपतेर्वकुलाभिरामं
श्रीमत्तदंघ्रियुगलं प्रणमामि मूर्ध्ना ॥ ४ ॥

भूतं सरश्च महदाह्वयभट्टनाथ
श्रीभक्तिसारकुलशेखरयोगिवाहान् ।
भक्तांघ्रिरेणुपरकालयतीन्द्रमिश्रा
ञ्श्रीमत्पराङ्कुशमुनिं प्रणतोस्मि नित्यम् ॥५॥

श्रीयदुगिरियतिराजमठीयगुरुपरंपरा ध्यान श्लोका:

श्रीरामानुजयोगिना भगवता पूतेऽभिजातं कुले
यद्द्रौ तदुप क्रमे यतिमठे संप्राप्तमोक्षाश्रमम् ।
प्राप्ताभिख्यमनंतसंयमिवरं संपत्सुताख्ये पदे
श्रीमत्सौम्य नृसिंहयोगिकरुणालब्धात्मबोधं भजे-१

जन्म नक्षत्र दिन ध्यान श्लोक.—

कालयुक्तिशरत्कुंभ मैत्रतारासमुद्भवम् ।
यद्वद्रियतिराजश्रीसंपत्सुत मुनिं भजे ॥१॥

यद्वद्रिनाथपदपंकजकिङ्कराग्र्यं
श्रीश्रीनिवासकरुणापरिलब्धबोधम् ।
नारायणाख्यमुनिवर्यकटाक्षपात्रं
संपत्कुमारयतिराजगुरुं भजेऽहम् ॥ १ ॥

मेषे शतभिषग्जातं पराभवशरद्वरे ।
यद्वद्रियतिराज श्रीसंपत्पुत्रमुनिं भजे ॥ १ ॥

*श्रीयद्वद्रियतीन्द्रपूर्णकरुणापात्रं तदीये मठे
संप्राप्ताश्रममाश्रितैकशरणं संपत्कुमारेक्षणात् ।
श्रीरामानुजसंयमीन्द्रशठजिच्छ्रीसूक्तिसारार्थदं
श्रीमन्तं यतिराजसंयमिवरं नारायणं संश्रये ॥ २ ॥

वृषभे मास्यनूराधाजातं नारायणाभिधम् ।
बालधन्विकुलाब्धीन्दुं यतिराजगुरुं भजे ॥ २ ॥

---

* श्रीमद्वादिभयङ्करार्ययतिराट्पादाब्जपुष्पन्धयं
श्रीमत्सौम्यनृसिंहसूरिकृपया प्राप्तागमान्तद्वयम् ।
वन्देऽहं वरबालधन्विकुलजं वेदान्तयुग्मार्थदं
श्रीसंपत्सुतयादवाद्रियतिराण्णारायणं सद्गुरुम् ॥

इत्युत्तरदेशीयपाठः ।

शेषार्यान्वयबालधन्विकुलजश्रीवासकृष्णार्ययोः
प्रेम्णाप्तोभयवेदमौलिमनघंशान्त्यादिवारांनिधिम्।
श्रीनारायणयोगिवर्यचरणद्वन्द्वैकनिष्ठं भजे
श्रीमद्यादवशैलशृङ्गयतिराट्संपत्कुमारं मुनिम् ॥३॥

शेषवंश्याच्छ्रीनिवासाद्वरसन्निधिवेददात् ।
स्वातिजं कर्कटे वन्दे मन्त्रवेदार्थदं मुनिम्॥३॥

श्रीमद्यादवशैलशृङ्गयतिराट्संपत्कुमाराद्यतेः
संप्राप्तोभयवेदमौलिमनघं शान्तिक्षमाभूषणम्
श्रीभाष्यद्रमिडागमादिनिरतं श्रीवैष्णवाराधकं
वन्देहं यदुभूधरेन्द्रयतिराट्नारायणाख्यं मुनिम्॥४

बालधन्विकुलोद्भूतं मिथुने मासि रौद्रभे ।
यदुवाद्रियतिराज श्रीनारायणमुनिं भजे ॥ ४ ॥

* शेषांर्यान्वयदुग्धवारिधिकलानाथादनन्तार्यतः
संप्राप्तोभयवेदमौलिमनघं श्रीभाष्यसारार्थमम् ।
शान्त्याद्यात्मगुणाकरंयतिपतेः पदाम्बुजैकाश्रयं
वन्देहं यदुभूधरेन्द्रयतिराट्संपत्कुमारं मुनिम् ॥५॥
मासि कर्कटके पूर्वप्रोष्ठपद्यां समुद्भवम् ।
यद्द्रियतिराजाख्यं संपत्सुतमुनिं भजे ॥५॥
**श्रीमत्कौशिकवंशमौक्तिकमणिं श्रीशैलवर्यात्मजं
श्रीमत्सौम्यनृसिंहदेशिकपदासक्तान्तरङ्गं शुचिम् ।
तस्माज्ज्ञानदयानिधेरवगतत्रय्यन्तयुग्मार्थदं
वन्देहं यदुभूधरेन्द्रयतिराण्णारायणाख्यं मुनिम्॥६॥
( मिथुन मासे पूर्वप्रोष्ठपदीनक्षत्रं )

---

* रामानुजार्यपदपंकजभृङ्गराजं
श्रीमच्छठारिकरुणापरिलब्धबोधम् ।
ध्यायामि यादवमहीधरयोगिराज
संपत्कुमारयतिराजमहामुनीन्द्रम् ॥
इत्यौत्तरीयः पाठः ।

**संपत्पुत्रयमीन्द्रपादभजनादाप्तप्रबोधादिकं
नानाशास्त्रविचारणेन विदुषामग्रेसरं योगिनम् ।
श्रीमल्लक्ष्मणयोगिदर्शनसुधाम्भोधेर्निशानायकं
वन्दे श्रीयदुभूधरेन्द्रयतिराण्णारायणाख्यं गुरुम् ॥
इत्यौत्तरीयः पाठः ।

श्रीमद्वेङ्कटलक्ष्मणार्ययमिनः कारुण्यपाथोनिधेः
संप्राप्तोभयवेदमौलिहृदयं वात्सल्यवारांनिधिम् ।
श्रीयद्वद्रियतीन्द्रलब्धयतिराट्संपत्सुताख्यं मुनिं
श्रीनारायणपादपङ्कजयुगध्यानैकनिष्ठं भजे ॥७॥

भवाब्दे मिथुने मासि भरण्या मास्यतोदयं ।
सेवे यदवद्रियतिराट् संपत्पुत्रमुनिं सदा ॥

श्रीवेङ्कटेशस्य दयैकपात्रं
श्रीमच्छठारातिपदाब्जभृङ्गम् ।
श्रीमद्यतीन्द्रप्रवणंप्रपद्ये
यद्वद्रिनारायणयोगिवर्यम् ॥ ८ ॥

श्रीवेङ्कटेशकरुणापरिणामपात्रं
श्रीमच्छठारिपदपङ्कजराजहंसम् ।
श्रीयादवाद्रियतिराजदयैकपात्रं
संपत्कुमारमुनिवर्यमहं प्रपद्ये ॥ ९ ॥

संपत्सुतस्य यमिनः पदपङ्कजालिं
संपत्कुमारमुनिवर्यकृपात्तबोधम् ।

तल्लब्धवेदयुगलं यदुभूधरश्री
नारायणं मुनिवरं सतत भजेहम् ॥ १० ॥

*शेषार्यवेङ्कटयतीन्द्रपदाब्जहंसं
श्रीशैलशेषवरदार्यदयाप्तबोधम् ।
श्रीवादिभीकरयदुक्षितिभृद्यतीन्द्र
संपत्कुमारमुनिवर्यमहंप्रपद्ये ॥ ११ ॥

कन्यायां स्वातिसंजातंवादि श्रीकृकुलोद्भवं ।
सुशीलं सद्गुरुं वंदे संपत्पुत्रमुनिं सदा ॥११॥

श्रीसंपत्सुतसंयमीन्द्रचरणद्वन्द्वाश्रयं सद्गुणं
श्रीमन्तं गुरुसार्वभौममनघं वेदान्तयुग्मार्थदम् ।
श्रीमद्यादवशैलनाथयतिराट्कैङ्कर्यनिष्ठं सदा
श्रीनारायणसयमीन्द्रमतुलोदारस्वभावं भजे ॥१२॥

---

*नारायणाख्यमुनिवर्यपदाब्जहंसं
तस्य प्रसादमहिमातिशयाप्तबोधम् ।
श्रीवादिभीकरयदुक्षितिभृद्यतीन्द्र
संपत्कुमारमुनिवर्यमह प्रपद्ये ॥
इत्यौत्तरीय. पाठ. ।

नारायणाख्यमुनिवीक्षणजातबोधं
संसारवारिधिसमुत्तरणैकनावम् ।
यद्वद्रिनाथकृपया प्रतिवादिसिंहं
संपत्कुमारमुनिवर्यमहं प्रपद्ये ॥ १३ ॥

संपत्पुत्रमुनेः शिष्यं नारायणमुनीश्वरम् ।
दुर्वादितूलवातूलं सेवे यद्वद्रिवासिनम् ॥१४॥

श्रीनारायणयोगिवर्यकरुणालब्धागमान्तद्वयं
मायावादिमतप्रभूततिमिरप्रोच्चाटने भास्करम् ।
श्रीयद्वद्रियतीन्द्रमाधवकृपाप्राप्तप्रबोधोज्ज्वलं
संपत्पुत्रमुनिप्रवीणमनघं सेवे यतीनां वरम् ॥१५॥

यद्वद्रिरामानुजयोगिवर्य
कटाक्षलब्धागममौलियुग्मम् ।
नमामि नारायणयोगिवर्यं
दुर्वादिहंसांबुदसन्निभं तम् ॥ १६ ॥

नारायणार्ययतिवर्यकृपैकपात्रं
संसारसागरविशोषणकुंभजातम् ।

यद्वद्रिनाथकरुणापरिलब्धबोधं

संपत्कुमारमुनिवर्यमहं भजामि ॥ १७ ॥

श्रीसंपत्सुतयादवाद्रियतिराट्पादारविन्दाश्रयं

वेदान्तद्वयदेशिकं गुणनिधिं श्रीयादवाद्रीशितुः।

कैङ्कर्यैकविचारणादिनिरतं रामानुजार्याज्ञया

सत्सेवाभिरुचिं यतीन्द्रमनघं नारायणं संश्रये ॥१८

नारायणाख्ययतिवर्यकृपासुपात्रं

यद्वद्रिनाथपदपङ्कजसक्तचित्तम्।

श्रुत्यन्तयुग्मविबुधैः परिपूज्यमानं

संपत्कुमारयतिराजमुनिं भजामि ॥ १९ ॥

श्रीमद्यतीन्द्रवरयोगिकृपासुपात्रं

संपत्कुमारयतिराजपदाब्जभृङ्गम्।

वेदान्तयुग्मविशदीकरणप्रवीणं

नारायणं गुरुवरं यतिवर्यमीडे ॥ २० ॥

सौम्योपयन्तृमुनिवर्यपदाब्जभृङ्गं

श्रीयादवाद्रियतिराजकृपाप्रभाव्यम्।

तस्मादवाप्तचरमाश्रम मार्यसेव्यं
संपत्कुमारयतिराजमुनिं प्रपद्ये ॥ २१ ॥

श्रीशैलेशदयापात्रं धीभक्त्यादिगुणार्णवम् ।
यतीन्द्रप्रवणं वन्दे रम्यजामातरं मुनिम् ॥२२॥

नमः श्रीशैलनाथाय कुन्तीनगरजन्मने ।
प्रसादलब्धपरमप्राप्यकैङ्कर्यशालिने ॥२३॥

लोकाचार्याय गुरवे कृष्णपादस्य सूनवे ।
संसारभोगिसन्दष्टजीवजीवातवे नमः ॥ २४ ॥

श्रीकृष्णपादपादाब्जे नमामि शिरसा सदा ।
यत्प्रसादप्रभावेन सर्वसिद्धिरभून्मम ॥ २५ ॥

वेदान्तवेद्यामृतवारिराशे
वेदार्थसारामृतपूरमग्र्यम् ।
आदाय वर्षन्तमहं प्रपद्ये
कारुण्यपूर्णं कलिवैरिदासम् ॥ २६ ॥

नमो वेदान्तवेद्याय जगन्मङ्गलहेतवे ।
यस्य वागमृतासारपूरितं भुवनत्रयम् ॥२७॥

श्रीपराशरभट्टार्यः श्रीरङ्गेशपुरोहितः ।
श्रीवत्साङ्कसुतः श्रीमाञ्श्रेयसे मेस्तु भूयसे ॥ २८ ॥
रामानुजपदच्छाया गोविन्दाह्वानपायिनी ।
तदायत्तस्वरूपा सा जीयान्मद्विश्रमस्थली ॥२९॥
श्रीवत्सचिह्नमिश्रेभ्यो नम उक्तिमधीमहि
यदुक्तयस्त्रयीकण्ठे यान्ति मङ्गलसूत्रताम् ॥ ३० ॥
योनित्यमच्युतपदांबुजयुग्मरुक्म
　　व्यामोहतस्तदितराणि तृणाय मेने ।
अस्मद्गुरोर्भगवतोस्य दयैकसिन्धो
　　रामानुस्य चरणौ शरणं प्रपद्ये ॥ ३१ ॥
कमलापतिकल्याणगुणामृतनिषेवया ।
पूर्णकामाय सततं पूर्णाय महते नमः ॥ ३२ ॥
यत्पदांभोरुहध्यानविध्वस्ताशेषकल्मषः ।
वस्तुतामुपयातोहं यामुनेयं नमामि तम् ॥३३॥
अयत्नतोयामुनमात्मदास
　　मलर्कपत्रार्पणनिष्क्रयेण ।

य: क्रीतवानास्थितयौवराज्यं
नमामि तं राममभेयसत्त्वम् ॥३४॥

नमःपङ्कजनेत्राय नाथश्रीपादपङ्कजे।
न्यस्तसर्वभरायास्मत्कुलनाथाय धीमते ॥ ३५ ॥

नमोऽचिन्त्याद्भुताक्लिष्टज्ञानवैराग्यराशये ।
नाथाय मुनयेऽगाधभगवद्भक्तिसिन्धवे ॥ ३६ ॥

माता पिता युवतयस्तनया विभूति
स्सर्वं यदेव नियमेन मदन्वयानाम् ।
आद्यस्य न. कुलपतेर्वकुलाभिरामं
श्रीमत्तदङ्घ्रियुगलं प्रणमामि मूर्ध्ना ॥ ॥ ३७ ॥

भूतं सरश्च महदाह्वयभट्टनाथ
श्रीभक्तिसारकुलशेखरयोगिवाहान् ।
भक्तांघ्रिरेणुपरकालयतीन्द्रमिश्रान्
श्रीमत्पराङ्कुशमुनिं प्रणतोऽस्मि नित्यम्॥ ३८ ॥

श्रीरङ्गचन्द्रमसमिन्दिरया विहर्तुं
विन्यस्य विश्वचिदचिन्नयनाधिकारम् ।

यो निर्वहत्यनिशमङ्गुलिमुद्रयैव
सेनान्यमन्यविमुखास्तमशिश्रयाम ॥ ३९ ॥
नमः श्रीरङ्गनायक्यै यद्भ्रूविभ्रमभेदतः।
ईशेशितव्यवैषम्यनिम्नोन्नतमिदं जगत् ॥ ४० ॥
श्रीस्तनाभरणं तेजः श्रीरङ्गेशयमाश्रये।
चिन्तामणिमिवोद्वान्तमुत्सङ्गेनन्तभोगिनः ॥४१॥
श्रीवेङ्कटेशदयितां श्रियं घटकभावतः।
समाश्रित्य वृषाद्रीशचरणौ शरणं श्रये ॥ ४२ ॥
आकारत्रयसंपन्नामरविन्दनिवासिनीम्।
अशेषजगदीशित्रीं वन्दे वरदवल्लभाम् ॥ ४३ ॥
वरदं द्विरदाद्रीशं श्रीनिधिं करुणानिधिम्।
शरण्य शरणं यामि प्रणतार्तिहर हरिम् ॥ ४४ ॥
श्रियं घटकभावेन यादवाद्रिनिवासिनीम्।
संप्राप्य यादवाद्रीशचरणौ शरणं श्रये ॥ ४५ ॥
संपत्कुमाररक्षार्थमागतं ब्रह्मणः पदात्।
यदुशैलस्थितं मीने हस्ते नारायणं भजे ॥ ४६ ॥

सर्वसंपत्प्रदं नृणां संपत्पुत्रं श्रियःपतिम् ।
मीने पुष्ये यदुगिरौ कृताविर्भावमाश्रये ॥ ४७ ॥

अज्ञानजन्मगृहमात्मगुणैर्विमुक्त
माज्ञातिलङ्घनपरं यदुशैलनाथ ।
मिथ्याप्रपन्नमपि मामवलोकय त्वं
लक्ष्मीं क्षमामपिगुरूनवलोक्य पूर्वान् ।४८॥

श्रीरङ्गमङ्गलमणिं करुणाविवासं
श्रीवेङ्कटाद्रिशिखरालयकालमेघम् ।
श्रीहस्तिशैलशिखरोज्ज्वलपारिजातं
श्रीशं नमामि शिरसा यदुशैलदीपम् ॥ ४९ ॥

सव्यं पादं प्रसार्य श्रितदुरितहरं दक्षिणं कुञ्चयित्वा
जानुन्याधाय सव्येतरभुजमपरंनागभोगे निधाय ।
पश्चाद्बाहुद्वयेन प्रतिभटशमने धारयन्शङ्खचक्रे
देवीभूषादिजुष्टो जनयतु जगतां शर्म वैकुण्ठनाथः५०

इति श्रीयदुगिरियतिराजमठीयगुरुपरम्परा समाप्ता ॥

---

सूचना-एते त्रयोदश श्लोकाः "सौम्योयंतृमुनि इत्यतः २१ अनन्तर मनुसंधेयाः—

रामानुजार्यचरणांबुजभृङ्गराजं
यद्वद्रिराजकृपया प्रतिलब्धबोधम् ।
वेदान्तमार्गगमनैकमणिप्रदीपं
नारायणाख्यमुनिवर्यमहं भजामि ॥१॥

नारायणाख्ययतिराजपदाब्जहंसं
श्रीयादवाचलपतेः करुणैकपात्रम् ।
त्रय्यंतयुग्मविशदीकरणप्रवीणं
संपत्कुमारयतिवर्यमहं प्रपद्ये ॥ २ ॥

रामानुजार्यगुरुवर्यकृपैकपात्रं
यद्वद्रियोगिदयया प्रतिलब्धबोधम् ।
तस्य प्रसादकलयाऽऽत्तयतीन्द्रपीठं
नारायणं गुणनिधिंगुरुवर्यमीडे ॥ ३ ॥

नारायणाख्यगुरुवर्दयैकपात्रं
तस्मादवाप्तनिगमान्तयुगप्रबोधम् ।

यद्वद्रिराजसकलोत्सवबद्धदीक्षं
संपत्कुमारयमिनं शरणं भजामि ॥ ४ ॥

रामानुजाद्भगवतो यतिसार्वभौमात् ।
प्राप्तं क्रमान्निजपरंपरया मुनीन्द्रैः ।
सेवामनन्यसुलभां यदुशैलभर्त्तुः
संवर्द्धयन्तमनिशं मुनिमाश्रितोस्मि ॥ ५ ॥

आचार्यपीठमधिगम्य परंपराप्त
माम्नास्य साधुजनतां यदुशैलबंधोः ।
भूयः श्रिया प्रथयतिस्म पुरं यतीन्द्रं
रामानुजं तमपरं कलयेऽवतीर्णम् ॥ ६ ॥

देवे तु भक्तपुरवासिनि सिंहरूपे
सान्निध्यवाप परमं चरमाश्रमं यः ।
सम्पत्कुमारयतिराजपदैकनिष्ठं
नारायणं मुनिवरं गुरुमाश्रयामः ॥ ७ ॥

सेषामनुग्रहकृतामपि भक्तपुर्यां
यद्वद्रिसीम्नि च हरेर्यतिशेखरेण ।

उद्योतयंतमनवद्यगुणाभिरामं

संपत्सुताख्यमुनिमन्वहमाश्रयेऽहम् ॥ ८ ॥

यदुशिखरिशिखायां शासनं भक्तपुर्या

मपि यतिकुलभर्तुर्द्धारयन्यः स्वमूर्ध्ना ।

प्रथयति परिचर्य्यां साधु नारायणस्य

प्रथितमिह मुनिं तं नौमि नारायणाख्यम् ॥९॥

अर्चां गतोऽपि नमतामवनाय साक्षा

त्सेवां समृद्धयति यो यदुशैलभर्त्तुः ।

रामानुजं तमनिशं स्वयमर्चयन्तं

संपत्सुताख्ययमिनं शरणं प्रपद्ये ॥१०॥

यद्वद्रिसंपत्सुतपादसेवा

कैंकर्य साम्राज्यपदाभिषिक्तम् ।

श्रुत्यन्तयुग्मार्थसुधानिधानं

नमामि नारायणयोगिवर्यम् ॥ ११ ॥

संपत्सुतस्य यदुभूधरमंगलस्य

येन व्यतन्यत हरेरनपायिनी श्रीः ।

तं योगिनं यतिवरेण्यनिगीलवध
　　संपत्कुमारपदमन्कहमाश्रयामः ॥ १२ ॥

विन्यस्य यस्मिन्यदुशैलदीपं
　　श्रीशं स्वयं रंगपतिं प्रयास्यन् ।
रामानुजो व्याकृत यं स्वनाम्ना
　　तमादिमं संयमिनं प्रपद्ये ॥ १३ ॥

इतोऽग्रे "योनित्यमच्युत" इत्याद्यनुसंधेयम् ।



श्लोकगुरुपरम्परा

अस्मद्देशिकमस्मदीयपरमाचार्यानशेषान्गुरू
न्श्रीमल्लक्ष्मणयोगिपुङ्गवमहापूर्णौ मुनिं यामुनम् ।
रामं पद्मविलोचनं मुनिवरं नाथं शठद्वेषिणं
सेनेशं श्रियमिन्दिरासहचरं नारायणं संश्रये ॥१॥

वाक्यगुरुपरम्परा

अस्मद्गुरुभ्यो नमः । अस्मत्परमगुरुभ्यो नमः ।
अस्मत्सर्वगुरुभ्यो नमः । श्रीमते रामानुजाय नमः ।
श्री पराङ्कुशदासाय नमः। श्रीमद्यामुनमुनये नमः।
श्रीराममिश्राय नमः । श्री पुण्डरीकाक्षाय नमः ।
श्रीमन्नाथमुनये नमः ॥ श्रीमते शठकोपाय नमः ।
श्रीमते विष्वक्सेनाय नमः । श्रियै नमः ।
श्रीधराय नमः ।

श्रीमन्त्रः ।

ॐ नमो नारायणाय

द्वयम् ।

श्रीमन्नारायणचरणौ शरणं प्रपद्ये-
श्रीमते नारायणाय नमः ।

श्रीकृष्णचरमश्लोकः ।

सर्वधर्मान्परित्यज्य मामेकं शरणं व्रज ।
अहंत्वा सर्वपापेभ्यो मोक्षायिष्यमि मा शुचः ।

श्रीवराहचरमश्लोकः ।

स्थिते मनसि सुस्वस्थे शरीरे सति यो नरः ।
धातुसाम्ये स्थिते स्मर्ता विश्वरूपं च मामजम् ॥२॥
ततस्तं म्रियमाणं तु काष्ठपाषाणसन्निभम् ।
अहं स्मरामि मद्भक्तं नयामि परमांगतिम् ॥३॥

श्रीरामचरमश्लोकः ।

सकृदेव प्रपन्नाय तवास्मीति च याचते ।
अभयं सर्वभूतेभ्यो ददाम्येतद्व्रतं मम ॥ ४ ॥

षडर्था।

पठित्वा भाष्यं तत्प्रवचनमशक्तौ शठरिपो-
र्गिरि श्रद्धा तत्तत्प्रभुविरचितस्थाननिवहे।
प्रभोः कैङ्कर्यं वा प्रपदनमनोरर्थमननं
प्रपन्नानाँ वा मे भवतु परिचर्तापरिचयः॥
कुटिं कृत्वा तस्मिन्यदुगिरितटे नित्यवसतिः
षडर्थाद्श्रीकान्तप्रपदनविधौ साधकतमाः॥ १
श्रीभाष्यद्रविडागमप्रवचनं श्रीशस्थलेष्वन्वहं
कैङ्कर्यं यदुशैलनित्यवसतिः सार्थद्वयोच्चारणम्।
यद्वा भागवताभिमानवसतिः श्रेयस्सतामित्यलं
शिष्यान्प्राह यतीश्वरःपरमगाद्विष्णोःपदं शाश्वतम् २
गच्छन्परं पदमुवाच वचाँसि यानि
रामानुजार्य इह तेषु चतुर्थसिद्धाम्।
श्रीयादवाद्रिवसतिं सततं भजन्तः
सन्तो भवन्ति मम सन्ततिमूलनाथाः॥३

मङ्गलाशासनानि ।

लक्ष्मीचरणलाक्षाङ्कसाक्षिश्रीवत्सवक्षसे ।
क्षेमङ्कराय सर्वेषां श्रीरङ्गेशाय मङ्गलम् ॥१

श्रियः कान्ताय कल्याणनिधये निधयेऽर्थिनाम् ।
श्रीवेङ्कटनिवासाय श्रीनिवासाय मङ्गलम् ॥२

अस्तु श्रीस्तनकस्तूरीवासनावासितोरसे ।
श्रीहस्तिगिरिनाथाय देवराजाय मङ्गलम् ॥३

नारायणाचलोत्तुङ्गशृङ्गशृङ्गार सूर्तये ।
रामानुजार्यपुत्राय संपत्पुत्राय मङ्गलम् ॥४

श्रियः कान्तस्य कृपया निर्निबन्धप्रवृत्तया ।
गर्भेभिषिक्तो यस्तस्मै शठकोपाय मङ्गलम् ॥५

मनोज्ञवरयोगीन्द्रमानसाम्भोजभानवे ।
यदुशैलनिवासाय यतिराज मङ्गलम् ।।६

मङ्गलं मुनिवर्याय रम्यजामातृयोगिने ।
यच्छात्रभावं संप्राप्तः श्रीशः श्रीरङ्गनायकः ।।७

श्रीभाष्यकारप्रपत्तिः।

श्रीमन्निरङ्कुशसमाश्रितवत्सलत्व-

भूमन्निबन्धनविहीनदयाम्बुराशे ।

स्वामिन्सुशील यदुशैलशिरोमिवाथ

रामानुजार्यचरणौ शरणं प्रपद्ये ॥ १

श्रीशैलपूर्णगुरुयामुनपादपूर्ण-

मालाधरार्यमुखपूर्वगुरूत्तमानाम् ।

पादारविन्दयुगशेखरितोत्तमाङ्ग

रामानुजार्यचरणौ शरणं प्रपद्ये ॥ २

योगीन्द्रशूधकुरुकाधिपकूरनाथ

गोविन्दमुख्यगुरुबृन्दशिरोभिवन्द्यौ ।

आनन्दमन्दमखिलान्तर मादधानौ

रामानुजार्यचरणौ शरणं प्रपद्ये ॥ ३

निन्ये तिरोधिमचिरेण कुमार्गजालं

निष्कन्टका च पदवी निगमावधीनाम् ।

यस्मिञ्छ्रितेवतरणं भुवि तस्य तेऽस्म

द्रामानुजार्यचरणौ शरणं प्रपद्ये ॥४॥

अश्रान्तपूर्णकलशान्तकलङ्ककान्त

चन्द्रानुसारिनखचन्द्रिकयाऽनुलिप्तौ।

सौन्दर्यसागरतरङ्गसमाङ्गुलीकौ

रामानुजार्यचरणौ शरणं प्रपद्ये ॥ ५

सन्निनेन्तितौ सकलतापहरौ नतानाँ

सन्दर्शिनामपि दृशश्चरितार्थयन्तौ ।

संफुल्लकोकनदसोदरतां गतौ तौ

रामानुजार्यचरणौ शरणं प्रपद्ये ॥ ६

यत्संश्रिताः कलिमयत्नत उत्तरन्ति

यद्रागिनां खलु भवान्नभयं कदाचित् ।

यत्सङ्गिनां न कदनं मदनात्तवैतौ

रामानुजार्यचरणौ शरणं प्रपद्ये ॥ ७

यन्निष्ठिता निदधते यममूर्ध्नि पादं

यत्प्रेमिणश्च तृणयन्ति विधेर्विभूतीः ।

तौ तावकौ यदुधराभरणायमानौ

रामानुजार्यचरणौ शरणं प्रपद्ये ॥ ८ ।

संपत्कुमारसुकुमारसुसुन्दरत्व
सन्दर्शनाहितविरोधिभयातिरेकात् ।
यौ नैव यदुचलतश्चलस्ततस्तवैतौ
रामानुजातंचरणौ शरणं प्रपद्ये ॥ ९

श्रीमन्मनोज्ञवरसंयमिभक्तितोय
संपूर्णमानससरोवरराजहंसौ ।
प्राप्यौ तवावनतमण्डलपारिजातौ
रामानुजार्यचरणौ शरणं प्रपद्ये ॥१०॥

इति श्रीभाष्यकारप्रपपत्तिः समाप्ता

---

श्रीभाष्यकारमङ्गलानुशासनम् ।

श्रीश्रीशानकृपापाङ्गभङ्गसङ्गावगाहिने ।
मङ्गलायतनायास्तु यतिराजाय मङ्गलम् ॥१

यादवाचल शृङ्गाग्रभूषणीभवते भवेत् ।
भूषिताय गुणैर्भव्यैर्यतिराजाय मङ्गलम् ॥२

बकुलाभरणादीनाँयमिनाँ चरणाम्बुजैः ।
सुरभीकृतचित्ताय [illegible]राजाय मङ्गलम् ॥३

यस्यै श्वर्यं च माता च पिताचार्यः श्रियः पतिः ।
परं परांकुशो वा स्याद्यतिराजाय मङ्गलम् ॥४

श्रीरङ्गादीश्वराभीष्टदिव्यदेशेषु सन्ततम् ।
व्यामुग्धमानसायास्तु यतिराजाय मङ्गलम् ॥५

मिथोनपे [illegible]मोक्षैकदानदक्षरजोंघ्रये ।
करुणापक्ष्मलायास्तु यतिराजाय मङ्गलम् ॥६

यद्वचःक्रीडया वापि वेदाक्षरमयं भवेत् ।
सार्वज्ञयशशालिने तस्मै यतिराजाय मङ्गलम् ॥७

यत्पादसेविनः पुंसो ज्ञानभक्तिविरक्तयः ।
भूषयन्ति स्वयं तस्मै यतिराजाय मंगलम् ॥८॥

प्रचीनानां सुपक्वानाँ फलाय तपसां नृणाम् ।
जगज्जीवातवे भूयाद्यतिराजाय मंगलम् ॥९॥

मनोज्ञवरयोगीन्द्रमनसाम्भोजभानवे ।
यदुशैलनिवासाय यतिराजाय मंगलम् ॥१०

इति श्रीभाष्यकारमङ्गलानुशासनं समाप्तम् ॥

---

मुद्रक—काव्यतीर्थ प०विश्वम्भरनाथ वाजपेयी, ओंकार प्रेस, प्रयाग ।

